अहीने द्वितीया।। 6 - 2 - 47।।
अहीनवाचिनि समासे क्तान्त उत्तरपदे द्वितीयान्तं पूर्वपदं प्रकृतिस्वरं भवति। कष्टश्रितः। त्रिशकलपतितः। ग्रामगतः। कष्टशब्दोऽन्तोदात्तः। त्रीणि शकलान्यस्येति त्रिशकलः, बहुव्रीहिस्वरेणाद्युदात्तः। ग्रामशब्दो नित्स्वरेणाद्युदात्तः। अहीन इति किम् कान्तारातीतः। योजनातीतः। द्वितीयानुपसर्ग इति वक्तव्यम् । इह मा भूत् - सुखप्राप्तः, दुःखप्राप्तः। सुखापन्नः ,दुःखापन्नः। अन्तः,थाथ इत्यस्यापवादोऽयम्।।
तृतीया कर्मणि।। 6 - 2 - 48।।
कर्मवाचिनि क्तान्त उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं भवति। आहिहतः वज्रहतः। महाराजहतः। नखनिर्भिन्ना। दात्रलूना। आङि श्रिहनिभ्यां ह्रस्वश्च इति अहिनन्तोदात्तो व्युत्पादितः। केचिदाद्युदात्तमिच्छन्ति। वज्रो रक्प्रतययान्तः। महाराजष्टच्प्रत्ययान्तः। नास्य खमस्तीति बहुव्रीहौ नकुलनख इति नखशब्दो निपातितः। तेन नञ्सुभ्याम् इत्यन्तोदात्तः। दात्रशब्दः दाम्नीशस इति ष्ट्रन्प्रत्ययान्तः। कर्मणीति किम् रथेन यातो रथयातः। गत्यर्थत्वात्कर्तरि क्तः ।।
गतिरनन्तरः ।। 6 - 2 - 49।।
क्ते कर्मणि इति वर्त्तते। कर्मवाचिनि क्तान्त उत्तरपदे गतिरनन्तरः पूर्वपदं प्रकृतिस्वरं भवति। प्रकृतः। प्रह्वतः।
अनन्तर इति किम् अभ्युद्धृतः। समुद्धृतः। समुदाह्वतः। व्यवहितस्य गतेरयं स्वरो न भवति । अनन्तरे पुनरिष्यते। कारकपूर्वस्य तु सति शिष्टत्वात् थाथादिस्वर एव भवतिदूरादागत इति ।अनन्तरग्रहणसामर्थ्यादेव कृद्ग्रहणे गतिकारकपूर्वस्यापि इत्येतन्नाश्रीयते। कर्मणीत्येव - प्रकृतः कटं देवदत्तः। थाथादिस्वरापवादो योगः।।
तादौ च निति कृत्यतौ।। 6 - 2 - 50।।
तकारादौ च तुशब्दवर्जिते निति कृति परतो गतिरनन्तरःप्रकृतिस्वरो भवति। प्रकर्ता । प्रकर्तुम् । प्रकृतिः। प्रकर्ता इति तृन्नन्तः। कृत्स्वरबाधनार्थ वचनम्। तादाविति किम् प्रजल्पाकः। नितीति किम् प्रकर्त्ता । तृजन्तः।
कृद्ग्रहणमुपदेशे ताद्यर्थम् । इहापि यथा स्यात् - प्रलपिता, प्रलपितुमिति। अताविति किम् आगन्तुः।।
तवै चान्तश्च युगपत् ।। 6 - 2 - 51।।
तवैप्रत्ययस्यान्त उदात्तो भवति गतिश्चानन्तरः प्रकृतिस्वर इति एतदुभयं युगपद्भवति। अन्वेतवै। परिस्तरितवै। परिपातवै। तस्मात् पिता नाभिचरितवै। उपसर्गा आद्युदात्ता अभिवर्जमित्यभिरन्तोदात्तः। कृत्स्वरापवादो योगः ।।
अनिगन्तोऽञ्जतौ वप्रत्यये ।। 6 - 2 - 52।।
अनिगन्तो गतिः प्रकृतिस्वरो भवत्यञ्चतौ वप्रत्यये परतः। प्राङ् प्राञ्चौ, पाञ्चः। स्वरितो वानुदात्तेऽपदादौ इत्ययमेकादेश उदात्तः स्वरितो वा । पराङ् ,पराञ्चौ,पराञ्चः। अनिगन्त इति किम् प्रत्यङ् , प्रत्यञ्चौ , प्रत्यञ्चः । कृदुत्तरपदप्रकृतिस्वर इह भवति । वप्रत्यय इति किम् उदञ्चनः।चोरनगन्तोऽञ्चतौ वप्रत्यय इत्येष स्वरो भवति विप्रतिषेधेन पराचः। पराचा।।
न्यधी च ।। 6 - 2 - 53।।
नि,अधि,इत्येतौ चाञ्चतौ वप्रत्यये प्रकृतिस्वरौ भवतः। न्यङ्, न्यञ्चो न्यञ्चः। उदात्तस्वरिवतयोर्यणः स्वरितोषनुदात्तस्यइत्यञ्चतेरकारः स्वरितः। अध्यङ्, अध्यञ्चः। अधीचः। अधीचा।।
ईषदन्यतरस्याम्।। 6 - 2 - 54।।
ईषत् इत्येतत्पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति। ईषत्कडारः। ईषत्पिङ्गलः। ईषदित्ययमन्तोदात्तः। ईषद्भेद इत्येवमादौ कृत्स्वर एव भवति।।
हिरण्यपरिमाणं धने।। 6 - 2 - 55।।
हिरण्यपरिमाणवाचि पूर्वपदं धनशब्द उत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति। द्विसुवर्णधनम्। द्वौ सुवर्णौ परिमाणमस्य द्विसुवर्णं तदेव धनमिति कर्मधारयः। बहुव्रीहावपि परत्वाद्विकल्प एव भवति। द्विसुवर्णधनः।हिरण्यग्रहणं किम् प्रस्थधनम्। परमाणग्रहणं किम् काञ्चनधनम्। धन इति किम् निष्कमाला।।
प्रथमोऽचिरोपसम्पत्तौ।। 6 - 2 - 56।।
प्रथमशब्दः पूर्वपदमचिरोपसम्पत्तौ गम्यमानायामन्यत रस्यां प्रकृतिस्वरं भवति। अचिरोपसम्पत्तिः-अचिरोपश्लेषः, अभिनवत्वम् प्रथमवैयाकरणः- अभिनववैयाकरणः। सम्प्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः । प्रथमशब्दः प्रथेरमच् इति चित्त्वादन्तोदात्तः। अचिरोपसंपत्ताविति किम् प्रथमवैयाकरणः। वैयाकरणाना माद्यो मुख्यो वा यः स नित्यमन्तोदात्त एव।।
कतरकतमौ कर्मधारये।। 6 - 2 - 57।।
कतशब्दः कतमशब्दश्च पूर्वपदं कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति। कतरकठः। कतमकठः। कर्मधारयग्रहणमुत्तरार्थम्, इह तु प्रतिपदोक्तत्वादेव सिद्धम्।।
आर्यो ब्राह्मणकुमारयोः।। 6 - 2 - 58।।
आर्यशब्दः पूर्वपदं ब्राह्मणकुमारशब्दयोः कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति। आर्यब्राह्मणः। आर्यकुमारः। आर्यशब्दो ण्यदन्तोऽन्तस्वरितः। आर्य इति किम् परमब्राह्मणः। परमकुमारः। ब्राह्मणकुमारयोरिति किम् आर्यक्षत्त्रियः।कर्मधारये इत्येव - आर्यस्य ब्राह्मणः आर्यब्राह्मणः।।
राजा च ।। 6 - 2 - 59।।
राजा च पूर्वपदं ब्राह्मणकुमारयोरुत्तरपदयोः कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति। राजब्राह्मणः। राजकुमारः। कर्मधारय इत्येव - राज्ञो ब्राह्मणो

राजब्राह्मणः। राजकुमारः। पृथग्योगकरणमुत्तरार्थम्।।
षष्ठी प्रत्येनसि ।। 6 - 2 - 60।।
राजा इति वर्त्तते अन्यतरस्याम् इति च । षष्ठ्यन्तो राजशब्दः पूर्वपदं प्रत्येनस्युत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति। राज्ञः प्रत्येनाः राजप्रत्येनाः। षष्ठीति किम् राजा चासौ प्रत्येनाश्च राजप्रत्येनाः।।
क्ते नित्यार्थे ।। 6 - 2 - 61।।
क्तान्त उत्तरपदे नित्यार्थे समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति। चनित्यप्रहसितः। सततप्रहसितः। कालाः इति द्वितीयासमासोऽयम्। नित्यशब्दः त्यब्नेर्ध्रुवे इति त्यबन्त आद्युदात्तः। सततम् इति -यदा भावे क्तस्तदा थाथादिस्वरेणान्तोदात्तः। नित्यार्थ इति किम् मुहूर्त्तप्रहसितः।
ग्रामः शिल्पिनि ।। 6 - 2 - 62।।
ग्रामशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति। ग्रामनापितः। ग्रामकुलालः। ग्रमशब्द आद्युदात्तः। ग्राम इति किम् परमनाषितः शिल्पिनीति किम् ग्रामरथ्या।।
राजा च प्रशंसायाम् ।। 6 - 2 - 63।।
राजाशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदे प्रशंसायां गम्यमानायामन्यतरस्यां प्रकृतिस्वरं भवति। राजनापितः। राजकृलालः। कर्मधारये राजगुणाध्यारोपेणोत्तरपदार्थस्य प्रशंसा। षष्ठीसमासे च राजयोग्यतया तस्य । राजेति
किम् परमनापितः। प्रशंसायामिति किम् राजनापितः।शिल्पिनीत्येव - राजहस्ती।।
आदिरुदात्तः ।। 6 - 2 - 64।।
आदिरुदात्तः इत्येतदधिकृतम् इत उत्तरं यद्वक्ष्यामः, तत्र पूर्वपदस्यादिरुदात्तो भवतीत्येवं तद्वेदितव्यम्। वक्ष्यति -
सप्तमीहारिणौ धर्म्येऽहरणे इति। स्तूषेशाणः। मुकुटेकार्षापणम् । याज्ञिकाश्वः। वैयाकरणहस्ती। दृषदिमाषकः।
आदिः इति प्रागन्ताधिकारात् । उदात्तः इति प्रकृत्या भगालम् इति यावत्।।
सप्तमीहारिणौ धर्म्येऽहरणे ।। 6 - 2 - 65।।
सप्तम्यन्तं हारिवाचि च पूर्वपदं धर्म्यवाचिनि हरणशब्दादन्यस्मिन्नुत्तरपदे आद्युदात्तं भवति। हारोति देयंः स्वोकरोति सोऽपिधीयते। धर्म्यम् इत्याचारनियतं देयमुच्यते। धर्मो ह्यनुवृत्त आचारः ,तस्मादनपेतं तेन वा प्राप्यमिति। स्तूपेशाणः। मुकुटेकार्षापणम्। हलेद्विपदिका। हलेत्रिपदिका । दृषदिमाषकः । संज्ञायाम् इति सप्तमो समासः, कारनाम्नि च इति निभक्तेरलुक् । हारिणि - याज्ञिकाश्वः । वैयाकरणहस्ति। मातुलाश्वः। पितुव्यगवः। क्वचिदयमाचारो व्यवस्थितः - स्तूपादिषु शाणादि दातव्यम्, याज्ञिकादीनामश्वादीति।धर्म्य इति किम् स्तम्बेरम्ः । कर्मकरवर्द्धितकः । अहरण इति किम् वाडवहरणम् । वडवाया अयं वाडवः, तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते हरणमिति तदुच्यते । परोऽपि कृत्स्वरो हारिस्वरेण बाध्यते विप्रतिषेधेन - इत्येतदहरण इत्यनेन ज्ञाप्यते, तेन वाडवहार्यमिति हारिस्वरः सिद्धो भवति।।
युक्ते च ।। 6 - 2- 66।।
युक्तवाचिनि च समासे पूर्वपदमाद्युदात्तं भवति । गोबल्लवः । अश्वबल्लवः । गोमणिन्दः । अश्वमणिन्दः । गोसंख्यः । अश्वसंख्यः । युक्त इति - समाहितः, कर्त्तव्ये तत्परो यः स उच्यते ।।
वितभाषाऽध्यक्षे ।। 6 - 2- 67।।
अध्यक्षशब्द उत्तरपदे विभाषा पूर्वपदमाद्युदात्तं भवति । गवाध्यक्षः । अश्वाध्यक्षः।।
पापं च शिल्पिनि ।। 6 - 2- 68।।
पापशब्दः शिल्पिवाचिन्युत्तरपदे विभाषाऽऽद्युदात्तो भवति । पापनापितः पापकुलालः । पापाणके कुत्सितैः इति पापशब्दस्य प्रतिपदोक्तः
समानाधिकरणसमास इति षष्ठीसमासे न भवति - पापस्य नापितः पापनापित इति।।
गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ।। 6 - 2 - 69।।
गोत्रवाचिन्यन्तेवासिवाचिनि चोत्तरपदे माणवब्राह्मणयोश्च क्षेबवाचिनि समासे पूर्वपदमाद्युदात्तं भवति। जङ्घावात्स्यः । यो जङ्घादानं ददान्यहमिति वात्स्यः सम्पद्यते स जङ्घावात्स्य इति क्षिप्यते । भार्यासौश्रुतः । सुश्रुतापत्यस्य भार्याप्रधानतया क्षेपः । वशाब्राह्मकृतेयः । ब्रह्मकृतशब्दः शुभ्रादिषु पठ्यते । गोत्र। अन्तेवासि
-कुमारीदाक्षाः। कम्बलचारायणीयाः । धृतरौढीयाः । ओदनपाणिनीयाः । कुमार्यादिलाभकामा ये दाक्षादिभिः प्रोक्तानि शास्त्राण्यधीयते तच्छिष्यतां वा प्रतिपद्यन्ते त एवं क्षिप्यन्ते । अन्तेवासि । माणव - भिक्षामाणवः । भिक्षां लप्स्येऽहमिति माणंवो भवति । माणव।ब्राह्मण - दासीब्राह्मणः । वृषलीब्राह्मणः । भयब्राह्मणः । यो भयेन ब्राह्मणः सम्पद्यते । अत्र यस्यान्यत् समासलक्षणं नास्ति, सुप्सुपा इत्येव तत्र समासः कर्त्तव्यः।
गोत्रादिष्विति किम् दासीश्रोत्रियः । क्षेप इति किम् महाब्राह्मणः।।
अङ्गानि मैरेये ।। 6 - 2- 70।।
मैरेयशब्द उत्तरपदे तदङ्गवाचीनि पूर्वपदान्याद्युदात्तानि भवन्ति । गुडमैरेयः । मधुमैरेयः । मद्युमैरेयः । मद्यविशेषो मैरेयः, स्तस्य गुडविकारस्य गुडोऽङ्गं भवति । मधुविकारस्य मधु, तस्य मध्वङ्गम्। अङ्गानीति किम् परममैरेयः । मैरेय इति किम् पुष्पासवः । फलासवः।।

भक्ताख्यास्तदर्थेषु ।। 6 - 2- 71 ।।

भक्तम् - अन्नम् , तदाख्याः - तद्वाचिनः शब्दाः, तदर्थेषूत्तरपदेषु आद्युदात्ता भवन्ति । भिक्षाकंसः । श्राणाकंसः । भाजीकंसः । भिक्षादयोऽन्नवचनाः ।भक्ताख्या इति किम् समाशशालयः । समाशनं समाश कइति क्रियामात्रमुच्यते, न द्रव्यम् । तदर्थेष्विति किम् भिक्षाप्रियः। बहुव्रीहिरयमत्र पूर्वपदमन्तोदात्तम् ।।

गोबिडालसिंहसैन्धवेषूपमाने ।। 6 - 2 - 72।।

गवादिषूपमानवाचिषूत्तरपदेषु पूर्वपदमाद्युदात्तं भवति । धान्यगवः । हिरण्यगवः । भिक्षाविडालः । तृणसिंहः ।
काष्ठसिंहः । सक्तुसैन्धवः । पानसैन्धवः । धान्यं गौरिवेति विगृह्य व्याघ्रादेराकृतिगणत्वाद् उपमितं व्याघ्रादिभिः इति समासः । उपमानार्थाऽपि यथासम्भवं यथाप्रसिद्धि च योजयितव्यः । गवाकृत्या सन्निवेशितं धान्यगवशब्देनोच्यते। उपमान इति किम् परमसिंहः।।

अके जीविकार्थे ।। 6 - 2 - 73 ।।

अकप्रतयान्त उत्तरपदे जीविकार्थवाचिनि समासे पूर्वपदमाद्युदात्तं भवति । दन्तलेखकः । नखलेखकः । अवस्करशेधकः । रगणीयकारकः।
दन्तलेखनादिभिर्येषां जीविका त एवमुच्यन्ते । नित्यं क्रीडा जीविकयोः इति समासः । अक इति किम् रमणीयकर्त्त । जीवकार्थ इति किम् इक्षुभक्षिकां मे धारयसि।।

प्राचां क्रीडायाम् ।। 6 - 2 - 74 ।।

प्राग्देशवर्त्तिनां या क्रीडा तद्वाचिनि समासेऽकप्रत्ययन्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति । उद्दालकपुष्पभञ्जिका
। वीरणपुष्पप्रचायिका । शालभञ्जिका । तालभञ्जिका । संज्ञायाम् इति ण्वुल् , नित्यं क्रीडाजीविकयोः इति
षष्ठीसमासः । प्राचामिति किम् जीवपुत्रप्रचायिका । इयमुदीचां क्रीडा । क्रीडायामिति किम् तव पुष्पप्रचायिका । पर्याये ण्वुच्प्रत्त्ययो भवति ।।

अणि नियुक्ते ।। 6 - 2 - 75 ।।

अणन्त उत्तरपदे नियुक्तवाचिनि समासे पूर्वपदमाद्युदात्तं भवति । छत्त्रधारः । तूणीरधारः । कमण्डलुग्राहः । भृङ्गारधारः । नियुक्तः - अधिकृतः स च कस्मिंश्चित्कर्तव्ये तत्परो न भवतीति नियुक्तः इत्यनेन सिध्यति । नियुक्त इति किम् काण्डलावः । शरलावः ।।

शिल्पिनि चाकृञ ।। 6 - 2 - 76 ।।

शिल्पिवाचिनि समासेऽणन्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति, स चेदण् कृञो न भवति । तन्तुवायः । तुन्नवायः । वालवायः ।शिल्पिनीति किम् । काण्डलावः । अकृञ इति किम् कुम्भकारः । अयस्कारः।।

संज्ञायां च ।। 6 - 2 - 77 ।।

संज्ञायां विषयेऽणन्त उत्तरपदेऽकुञः पूर्वपदमाद्युदात्तं भवति । तन्तुवायो नाम कीटः । बालवायो नाम पर्वतः । अकृञ इत्येव - रथकारो नाम ब्राह्मणः ।।

गोतन्तियवं पाले ।। 6 - 2 - 78 ।।

गो, तन्ति, यव - इत्येतानि पूर्वपदानि पालशब्द उत्तरपदे आद्युदात्तानि भवन्ति । गोपालः । तन्तिपालः । यवपालः । अनियुक्तार्थ आरम्भः। गोतन्तियवमिति किम् वत्सपालः । पाल थइति किम् गोरक्षः ।।

णिनि ।। 6 - 2 - 79।।

णिनन्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति । पूष्पहारी । फलहारी । पर्णहारी ।।

उपमानं शब्दर्थप्रकृतावेव ।। 6 - 2- 80 ।।

उपमानवाचि पूर्वपदं शब्दार्थप्रकृतावेव णिन्त उत्तरपद आद्युदात्तं भवति । उपमानं नियम्यते । उष्ट्रक्रोशी । ध्वाह्क्षरावी । खरनादी । उपमानग्रहणमस्य पूर्वस्य च योगस्य विश्यविभागार्थम् । शब्दार्थप्रकृताविति किम् वृकवञ्चो । वृकप्रेक्षी । प्रकृतिग्रहणं किम् प्रकृतिरेव यत्रेपसर्गनिरपेक्षा शब्दार्था भवति तत्रैव यथा स्याद, इह मा भूद् - गंर्दभोञ्चारी, कोकिलाभिव्याहारीति । एवकारकरणमुपमानावधारणार्थम् । शब्दार्थप्रकृतौ त्वनुपमानमुपमानं चाद्युदात्तं भवति । सिंहविनर्दी । पुष्कलजल्पी ।।

युक्तरोह्यादयश्च ।। 6 - 2- 81 ।।

युक्तारोह्यादयः समासा आद्युदात्ता भवन्ति । युक्तारोही । आगतरोही । आगतयोधी । आगतवञ्ची । आगतनर्दी । आगतप्रहारी । एते णिनन्ताः णिनि इत्यस्यैवोदाहरणार्थं पठ्यन्ते । पूर्वोत्तरपदनियमार्था इति केचित् । इह मा बूद् - वृक्षारोही, युक्ताध्यायीति । आगतमत्स्या। क्षीरहोता । भगिनीभर्त्ता । याजकादित्वात् षष्ठीसमासावेतौ ग्रामगोधुक् । अश्वत्रिरात्रः । गर्गत्रिरात्रः । व्युष्टत्रिरात्रः । शणपादः । समपादः । षष्ठीसमासा एते । एकशितिपात् । एकः शितिः पादोऽस्येति त्रिपदबहुव्रीहिः । तत्रैकशितिशब्दः तद्धितार्थोत्तरपद इति तत्पुरुषसंज्ञः , तस्य निमित्तिस्वरबलीयस्त्वाद् अन्तोदात्तत्वं प्राप्तमित्याद्युदात्तत्वं
विधीयते। एवमपि नार्थ एतेन, इगन्त0 द्विगौ इति सिद्धत्वात् एवं तर्हि ज्ञापकार्थम्, एतज् ज्ञापयति - शित्यन्तस्योत्तरपदे द्विगुस्वरो न भवतीति । तेन द्विशितिपादित्यत्र तिशब्द उदात्तो भवति । निमित्तिस्वलबलीयस्त्वस्याप्येकशितिपात्सवरवचनमेव ज्ञापकं वर्णयन्ति । पात्रेसमितादयश्च युक्तारोह्यादयः, ततस्तेऽप्याद्युदात्ता भवन्ति ।।

दीर्घकाशतुषभ्राष्ट्रवटं जे ।। 6 - 2 - 82 ।।

दीर्धान्तं पूर्वपदम्, काश, तुष, भ्राष्ट्र, वट - इत्येतानि च जे उत्तरपदे आद्युदात्तानि भवन्ति कुटीजः । शमीजः काशजः। तुषजः। भ्राष्ट्रजः । वटजः ।।

अन्त्यात्पूर्वं बह्वचः ।। 6 - 2- 83 ।।

जे उत्तरपदे बह्वचः पूर्वपदस्यान्त्यात्पूर्वमुदात्तं भवति । उपसरजः । मन्दुरजः । आमलकीजः । वडवाजः ।बह्वज इति किम् दग्धजानि तृणानि ।।

ग्रामेऽनिवसन्तः ।। 6 - 2 - 84 ।।

ग्रामशब्द उत्तरपदे पूर्वपदमाद्युदात्तं भवति न चेन्निवसद्वाचि भवति । मल्लग्रामः । वणिग्ग्रामः । ग्रामशब्दोऽत्र समूहवाची । देवग्रामः देवस्वामिक इत्यर्थः। अनिवसन्त इति किम् दाक्षिग्रामः । माहकिग्रामः । दाक्ष्यादयो निवसन्ति यस्मिन्ग्रामे स तेषामिति व्यपदिश्यते ।।

घोषादिषु च ।। 6 - 2 - 85 ।।

घोषादिषु चोत्तरपदेषु पूर्वपदमाद्युदात्तं भवति । दाक्षिघोषः । दाक्षिकटः । दाक्षिपल्वलः । दाक्षिह्नदः । दाक्षिबदरी । दाक्षिपिङ्गलः । दाक्षिपिशङ्गः । दाक्षिशाला । दाक्षिरक्षा । दाक्षिशिल्पी । दाक्ष्यश्वत्थः । कुन्दतृणम् । दाक्षिशाल्मली । आश्रममुनिः । शाल्मलिमुनिः । दाक्षिप्रेक्षा । दाक्षिकूटः । यान्यत्र निवासनामधेयानि तेषु निवसद्वाचीन्यपि पूर्वपदान्यद्युदात्तानि भवन्ति । अनिवसन्त इति नानुवर्त्तयन्ति केचित् । अपहे पुनरनुवर्त्तयन्ति ।।

छात्त्र्यादः शालायाम ।।6 - 2- 86 ।।

शालायामुत्तरपदे छात्त्र्यादय आद्युदात्ता भवन्ति । छात्त्रिशाला । पेलिशाला । भाण्डिशाला । छात्त्रि । पेलि । भाण्डि । व्याडि । आपिशलि । आखण्डि । आपारि । गोमि । छात्त्र्यादिः । यदा शालान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, तदापि तत्पुरुषे शालायां नपुंसके इत्येतस्मात्पूर्वविप्रतिषेधेन पूर्वपदप्राद्युदात्तं भवति । छात्त्रिशालम् । पेलिशालम् ।।

प्रस्थेऽवृद्धमकक्यादीनाम ।। 6 - 2- 87 ।।

प्रस्थशब्द उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्यदात्तं भवति। इन्द्रप्रस्थः । कुण्डप्रस्थः ह्नदप्रस्थः । सुवर्णप्रस्थः । अवृद्धमिति किम् दाक्षिप्रस्थः । माहकिप्रस्थः । अकर्क्यादोनामिति किम् कर्कीप्रस्थः । मधीप्रस्थः। कर्की । मधी । मकरी । कर्कन्धू । शमी । करीर । कटुक । कुरल । बदर । कर्क्यादिः ।।

मालादीनां च ।। 6 - 2 - 88 ।।

प्रस्थे इति वर्त्तते । प्रस्थ उत्तरपदे मालादीनामादिरुदात्तो भवति । मालाप्रस्थः । शालाप्रस्थः । माला । शाला। शोणा । द्राक्षा । क्षौमा । क्षामा । काञ्ची । एक । काम । मालादिः । वृद्धार्थ आरम्भः। एकशेणाशब्दयोः एङ् प्राचां देशे इति वृद्धसंज्ञा ।।

अमहन्नवं नगरेऽनुदीचाम् ।। 6 - 2 - 89 ।।

नगरशब्द उत्तरपदे महन्नवशब्दवर्जितं पूर्वपदमाद्युदात्तं भवति, तच्चेदुदीचां न भवति । सुह्मनगरम् । पुण्ड्रनगरम् । अमहन्नवमिति किम् महानगरम् । नवनगरम् । अनुदीचामिति किम् नदीनगरम् । कान्तोनगरम् ।।

अर्मे चावर्ण द्व्यच्त्र्यच् ।। 6 - 2 - 90 ।।

अर्मशब्द उत्तरपदे द्व्यच्त्र्यच् पूर्वपदमवर्णान्तमाद्युदात्तं भवति दत्तार्मम् । गुप्तार्मम् । कुक्कुटार्मम् । वायसार्मम्।

अवर्णमिति किम् वृहदर्मम् । द्व्यच्त्र्यजिति किम् कपिञ्जलार्मम् । अमहन्नबमित्येव - महार्मम् । नवार्मम् ।।

न भृताधिकसञ्जीवमद्राश्मकज्जलम् ।। 6 - 2- 91 ।।

भूत , अधिक, सञ्जीव, मद्र, अश्मन् , कज्जल - इत्येतानि पूर्वपदानि अर्मशब्द उत्तरपदे नाद्युदात्तानि भवन्ति । भूतार्मम् । अधिकार्मम् । सञ्जीवार्मम् । मद्राश्मग्रहणं सङ्घातविगृहीतार्थम् - मद्रार्मम्। अश्मार्मम् । मद्राश्मार्मम् । कव्वलार्मम् । समासान्तोदात्तत्वमेवात्र भवति । आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् दिवोदासाय गायत। पद्यश्वाय दाशुषे ।।

अन्तः ।। 6 - 2 - 92 ।।

अन्तः इत्यधिकृतम्, इत उत्तरं यद्वक्ष्यामस्तत्र पूर्वपदस्यान्त उदात्तो भवतीत्येवं वेदितव्यम् । वक्ष्यति - सर्वं गुणकार्त्स्न्ये । सर्वश्वेतः सर्वकृष्णः । प्राक् उत्तरपदादि इत्येतस्मादयमधिकारो वेदितव्यः ।।

सर्व गुणकार्त्स्न्ये ।। 6 - 2- 93 ।।

सर्वशब्दः पूर्वपदं गुणकार्त्स्न्ये वर्त्तमानमन्तोदात्तं भवति । सर्वश्वेतः सर्वकृष्णः । सर्वमहान् । सर्वमिति किम् परमश्वेतः । आश्यव्याप्त्या परमत्वं श्वेतत्वस्येति । गुणकार्त्स्न्ये वर्त्तते । गुणग्रहणं किम् सर्वसौवर्णः । सर्वराजतः । कार्त्स्न्ये इति किम् सर्वेषां श्वेततरः सर्वश्वेतः । गुणात्तरेण समासस्तरलोपश्च वक्तव्यः इत्येवमत्र

समासः , तरब्लोपश्च ।।

संज्ञायां गिरिनिकाययोः ।। 6 - 2 - 94 ।।

संज्ञायां विषये गिरि, निकाय - इत्येतयोरुत्तरपदयोः पूर्वपदमन्तोदात्तं भवति । अञ्जनागिरिः । भञ्जनागिरिः । नकाये - शापिण्डिनिकायः । मौण्डिनिकायः । चिखिल्लिनिकायः । संज्ञायामिति किम् परमगिरिः । ब्राह्मणनिकायः ।।

कुमार्यो वयसि ।। 6 - 2 - 95 ।।

कुमार्यामुत्तरपदे वयसि गम्यमाने पूर्वपदमन्तोदात्तं भवति । वृद्धकुमारी । जरत्कुमारी ।कुमारीशब्दः पुंसा सहासम्प्रयोगमात्रं प्रवत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिर्वयोविशेषवचनैः समानाधिकरणो भवति । तञ्च वय इह गृह्यते, न कुमारत्वमेव । वयसीति किम् परमकुमारी ।।

उदकेऽकेवले ।। 6 - 2 - 96 ।।

अकेवलम् -मिश्रम्, तद्वाचिनि समासे उदकशब्द उत्तरपदे पूर्वपदमन्तोदात्तं भवति । गुडमिश्रमुदकम् गुडोदकम् । तिलोदकम् । स्वरे कृते एकादेशः स्वरितो वानुदात्तेऽपदादौ इति पक्षे स्वरितो भवति ।अकेवल इति किम् शीतोदकम् । उष्णोदकम् ।।

द्विगौ क्रतौ ।। 6 - 2 - 97 ।।

द्विगावुत्तपदे क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तं भवति । गर्गत्रिरात्रः । कुसुरविन्दसप्तरात्रः । गर्गाणां त्रिरात्रः गर्गत्रिरात्रः । द्विगाविति किम् अतिरात्रः । अचश्चित्त्वादन्तोदात्तः । क्रताविति किम् बिल्वसप्तरात्रः । बिल्वशतस्य बिल्वहौमस्य वा सप्तरात्रो बिल्वसप्तरात्रः ।।

सभायां नपुंसके ।। 6 - 2 - 98 ।।

सभाशब्द उत्तरपदे नपुंसकलिङ्गे समासे पूर्वपदमन्तोदात्तं भवति । गोपालसभम् । पशुपालसभम् । स्त्रीसभम् । दासीसभम् । सभायामिति किम् ब्राह्मणसेनम् । नपुंसकमिति किम् राजसभा । ब्राह्मणसभा । सभायां प्रतिपदोक्तमिह नपुंसकलिङ्ग गृह्यत इति रमणीयसभम् , ब्राह्मणकुलमित्यत्र न भवति ।।

पुरे प्राचाम् ।। 6 - 2 - 99 ।।

पुरशब्द उत्तरपदे प्राचां देशे पूर्वपदमन्तोदात्तं भवति । ललाटपुरम् । काञ्चीपुरम् । शिवदत्तपुरम् । कार्णिपुरम् । नार्मपुरम् । प्राचामिति किम् शिवपुरम् ।।

अरिष्टगौडपूर्वे च ।। 6 - 2 - 100 ।।

अरिष्ट, गौड - इत्येवम्पूर्वे समासे पुरशब्द उत्तरपदे पूर्वपदमन्तोदात्तं भवति । अरिष्टपुरम् । गौडपुरम् । पूर्वग्रहणं किम् इहापि यथा स्यात् - अरिष्टश्रितपुरम् , गौडभृत्यपुरम् ।।

न हास्तिनफलकमार्देयाः ।। 6 - 2 - 101 ।।

हास्तिन, फलक, मार्देय - इत्येतानि पूर्वपदानि पुरशब्द उत्तरपदे नान्तोदात्तानि भवन्ति । पुरे प्राचाम् इति प्राप्तिः प्रतिषिध्यते । हास्तिनपुरम् । फलकपुरम् । मार्देयपुरम् । मृदोरपत्यं मार्देयः । शुभ्रादित्वाद् ढक् ।।

कुसूलकूपकुम्भशालं बिले ।। 6 - 2 - 102 ।।

कुसूल, कूप, कुम्भ, शाला - इत्येतानि पूर्वपदानि बिलशब्दे उत्तरपदेऽन्तोदात्तानि भवन्ति । कुसूलबिलम् । कूपबिलम् । कुम्भबिलम् । शालाबिलम् । कुसूलादिग्रहणं किम् सर्पबिलम् । बिल इति किम् कुसूलस्वामी।।

दिक्शब्दा ग्रामजनपदाख्यानचारनराटेषु ।। 6 - 2 - 103 ।।

दिक्शब्दाः पूर्वपदानि अन्तोदात्तानि भवन्ति ग्रामजनपदाख्यानवाचिषूत्तरपदेषु चारनराटशब्दे च । पूर्वषुकामशमी । अपरेषुकामशमी । पूर्वकृष्णमृत्तिका । अपरकृष्णमृत्तिका । जनपद - पूर्वपञ्चालाः । अपरपञ्चालाः । आख्यान - पूर्वाधिरामम् । पूर्वयायातम् । अपरयायातम् । अधिराममधिकृत्य कृतो ग्रन्थ आधिरामम् । तथा यायातम् । चानराट - पूर्वचानराटम् । अपरचानराटम् । शब्दग्रहणं कालवाचिनोऽपि दिक्शब्दस्य परिग्रहार्थम् ।।

आचार्योपसर्जनश्चान्तेवासिनि ।। 6 - 2 -104।।

आचार्योपसर्जनान्तेवासिवाचिन्युत्तरपदे दिक्शब्दा अन्तोदात्ता भवन्ति। पूर्वपाणिनीयाः । अपरपाणिनीयाः । पूर्वकाशाकुत्स्नाः । अपारकाशकुत्स्नाः ।आचार्योपसर्जन इति किम् पूर्वशिष्याः । अन्तेवासिनीति किम् पूर्वपाणिनीयं शास्त्रम् ।।

उत्तरपदवृद्धौ सर्व च ।। 6 - 2 - 105 ।।

उत्तरपदस्य इत्येवमधिकृत्य य विहिता वृद्धिस्तद्वत्युत्तरपदे सर्वशब्दो दिक्शब्दाश्चान्तोदात्त भवन्ति । सर्वपाञ्चालकः । पूर्वपाञ्चालकः । उत्तरपाञ्चालकः । सुसर्वार्धदिक्यशब्देभ्यः जनपदस्य इति तान्तवधिना जनपदलक्षणो वुञ्प्रत्ययः । सुसर्वार्द्धज्जिनपदस्य दिशोऽमद्राणाम् इति चोत्तरपदवृद्धिः। अधिकारलक्षणादिह न भवति - सर्वमासः, सर्वकारक इति ।।

बहुव्रीहौ विश्वं संज्ञायाम् ।। 6 - 2 - 106 ।।

बहुव्रीहौ समासे विश्वशब्दः पूरवपदं संज्ञायां विषयेऽनतोदात्तं भवति । विश्वदेवः । विश्वयशाः । विश्वमहान् । पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं प्राप्तम् । बहुव्रीहाविति किम् विश्वे च ते देवाः विश्वदेवाः । संज्ञायामिति किम् विश्वे देवा अस्य विश्वदेवः । विश्वामित्त्रः , विश्वाजिन इत्यत्र संज्ञायां मित्त्राजिनयोः इत्येतद्भवति परत्वात् ।

बहुव्रीहौ इत्येदधिक्रियते प्रागव्ययीभावसंज्ञानात् ।।

उदराश्वेषुषु ।। 6 - 2 -107 ।।

उदर, अश्व , इषु - इत्येतेषूत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये पूर्वपदमन्तोदात्तं भवति । वृकोदरः । दामोदरः । हर्यश्वः । यौवनाश्वः । सुवर्णपुङ्खेषुः महेषुः ।।

क्षेपे ।। 6 - 2 -108 ।।

क्षेपे गम्यमाने उदरदिषूत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये पूर्वपदमन्तोदात्तं भवति । कुण्डोदरः । घटोदरः । कटुकाश्वः । स्पन्दिताश्वः । अनिघातेषुः । चलाचलेषुः । अनुदरः , सूदर इत्यत्र नञ्सुभ्याम् इत्येतद्भवति विप्रतिषेधेन ।।

नदी बन्धुनि ।। 6 - 2 - 109 ।।
बहुव्रीहौ समासे बन्धुन्युत्तरपदे नद्यन्तं पूर्वपदमन्तोदात्त भवति । गार्गीबन्धुः । वात्सीबन्धुः । नदीति किम् ब्रह्मबन्धुः । ब्रह्मशब्द आद्युदात्तः । बन्धुनीति किम् गार्गीप्रियः ।।

निष्ठोपसर्गपूर्वमन्यतरस्याम् ।। 6 - 2 - 110 ।।
बहुव्रीहौ समासे निष्ठान्तमुपसर्गपूर्वं पूर्वपदमन्यतरस्यामन्तोदात्तं भवति । प्रधौतमुखः । प्रक्षालितपादः । यदि मुखशब्दः स्वाङ्गवाची, तदा पक्षे मुखं स्वाङ्गम् इत्येतद्भवति, न चेत्पूर्वपदप्रकृतिस्परत्वेन गतिरन्तरः इत्येतद्भवति । निष्ठेति किम् प्रसेचकमुखः । उपसर्गपूर्वमिति किम् शुष्कमुखः।।

उत्तरपदादिः ।। 6 - 2 - 111 ।।
उत्तरपदादिः इत्येतदधिकृतम् । यदित ऊर्ध्वमनुक्रमिष्याम उत्तररपदस्यादिरुदात्तो भवतीत्येवं तद्वेदितव्यम् । वक्ष्यति - कर्णो वर्णलक्षकणात् । सुक्लकर्णः , कृष्णाकर्णः । उत्तरपदस्य - इत्येतदा पादपरिसमाप्तेः । आदिः इति प्रकृत्या भगालम् इति यावत् ।।

कर्णो वर्णलक्षणात् ।। 6 - 2 - 112 ।।
बहुव्रीहौ समासे वर्णवाचिनो लक्षणवाचिनश्च कर्णशब्द उत्तरपदमाद्युदात्तं भवति । शुक्लकर्णः । कृष्णकर्णः । लक्षणात् - दात्राकर्णः । शङ्कूकर्णः । लक्षणस्य इति दीर्घत्वम् । पशूनां विभागज्ञापनार्थं दात्रशङ्कुप्रतिरुपकं
कर्णादिषु चिह्नं यत् क्रियते तदिह लक्षणं गृह्यते, तेन स्थूलकर्णं इत्यत्र न भवति । कर्ण इति किम् श्वेतपादः । कूटश्रृङ्गः । वर्णलक्षणादिति किम् शोभनकर्णः ।।

संज्ञौपम्ययोश्च ।। 6 - 2 -113 ।।
संज्ञायामौपम्ये च यो बहुव्रीहिर्वर्त्तते तत्र कर्णशब्द उत्तरपदमाद्युदात्तं भवति । संज्ञायाम् - कुञ्चिकर्णः । मणिकर्णः । औपम्ये - गोकर्णः । खरकर्णः ।।

कण्ठपृष्ठग्रीवाजर्ङ्घ च ।। 6 - 2 - 114 ।।
कण्ठ, पृष्ठ, ग्रीवा, जङ्घा - इत्येतानि उत्तरपदानि बहुव्रीहौ समासे संज्ञौपम्ययोराद्युदात्तानि भवन्ति । कण्ठः संज्ञायाम् - शितिकण्ठः । नीलकण्ठः । औपम्ये - खरकण्ठः । उष्ट्रकण्ठः । पृष्ठः संज्ञायाम् - काण्डपृष्ठः । नाकपृष्ठः । औपम्ये - गोपृष्ठः । अजपृष्ठः । ग्रीवा संज्ञायाम् - सुग्रीवः । नीलग्रीवः । दशग्रीवः । औपम्ये - गोग्रीवः । अश्वग्रोवः । जङ्घा संज्ञायाम् - नारीजङ्घः । तालजङ्घः । औपम्ये - गौजङ्घः । अश्वजङ्घः । एणीजङ्घः ।।

श्रृङ्गमक्स्थायां च ।। 6 - 2 - 115 ।।
श्रृङ्गशब्द उत्तरपदमवस्खायां संज्ञाौपम्ययोश्च बहुव्रीहौ आद्युदात्तं भवति । उद्गतश्रृङ्गः । द्व्यङ्गुलश्रृङ्गः । त्र्यङ्गुलश्रृङ्गः । अत्र श्रृङ्गोद्गमनादिकृतौ गवादेर्वतयोविशेषः - अवस्था । संज्ञायाम् - ऋष्यश्रृङ्गः । औपम्ये - गोश्रृङ्गः । मेषश्रृङ्गः ।।

नञो जरमरमित्त्रमृताः ।। 6 - 2 -116 ।।
नञ उत्तरे जरमरमित्त्रमृता बहुव्रीहौ समासे आद्युदात्ता भवन्ति । अजरः अमरः । अमित्त्रः । अमृतः । नञ इति किम् बाह्मणमित्त्रः । जरादय इति किम् अशत्रुः । नञसुभ्याम् इति उत्तरपदान्तोदात्तत्वमेवात्र भवति ।।

सोर्मनसी अलोमोषसी ।। 6 - 2 -117 ।।
सोरुत्तरमनन्तमसन्तं च बहुव्रीहौ समासे आद्युदात्तं भवति लोमोवसी वर्जयित्वा । सुकर्मा । सुधर्मा। सुधर्मा। सुप्रथिमा । असन्तम् - सुपयाः । सुयशाः। सुस्त्रोताः । सुस्त्रत् । सुध्वत् । सोरिति किम् कृतकर्मा । कृतयशाः । मनसी इति किम् सुराजा । सुरक्षा । अलोमोषसी इति किम् सुलोमा । सूषा ।अखनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च इत्यनर्थकपोरपि मनसोरिह ग्रहणम् । नञ्सुभ्याम् इत्यस्यायमपवादः । कपि तु परत्वात् कपि पूर्वम् इत्येतद्भवति । सुकर्मकः । सुस्त्रोतस्कः ।।

क्रत्वादयश्च ।। 6 - 2 -118 ।।
क्रत्वादयः सोरुत्तरे बहुव्रीहौ समासे आद्युदात्त भवन्ति । सुक्रतुः । सुदृशीकः । क्रतु । दृशीक । प्रतीक । प्रपूर्त्ति । हव्य । भग । क्रत्वादिः ।।

आद्युदात्तं वृद्युच्छन्दसि ।। 6 - 2 -119 ।।
यादद्युदात्तं द्व्यच् उत्तरपदं बहुव्रीहौ समासे सोरुत्तरं तदाद्युदात्तमेव भवति छन्दसि विषये । स्वश्वास्त्वा सुरथामर्जयेम । नित्स्वरेणाश्वरथशब्दावाद्युदात्तौ । आद्युदात्तमिति किम् या सुबाहुः स्वङ्गुरिः । बाहुशब्दः प्रत्ययस्परेणान्तोदात्तः । द्व्यजिति किम् सुगुरसत् । सुहिरण्यः । स्वश्वः । नञ्सुभ्याम् इत्यस्यायमपवादः ।।

वीरवीर्यौ च ।। 6 - 2 -120 ।।
वीर, वीर्य - इत्येतौ च शब्दौ सोरुत्तरौ बहुव्रीहौ समासे छन्दसि विषये आद्युदात्तौ भवतः । सुवीरेण ते । सुवीर्यस्य पतयः स्याम । वीर्यमिति यत्प्रत्ययान्तम् , तत्र यतोऽनावः इति आद्युदात्तत्वं न भवतीत्येतदेव
वीर्यग्रहणं ज्ञापकम् । तत्र हि सति पूर्वेणैव सिद्धं स्यात् ।।

कूलतीरतूलमूलशालाक्षसममव्ययीभावे ।। 6 - 2 - 121 ।।
कूल, तील, तूल, मूल, शाला, अक्ष, सम - इत्येतानि उत्तरपदानि अव्ययीभावसमास आद्युदात्तानि भवन्ति । परिकूलम् । उपकूलम् । परितीरम् । उपतीरम् । परितूलम् । उपतूलम् । परिमूलम् । उपमूलम् । परिशालम् । उपशालम् । उपाक्षम् । पर्यक्षम् । सुषमम् । विषमम् । निषमम् । दुःषमम् ।

तिष्ठद्गुप्रभृतिष्वेते पठ्यन्ते । कूलादिग्रहणं किम् उपकुम्भम् । अव्ययीभाव इति किम् परमकूलम् । उत्तरमकूलम् । पर्यादिभ्यः कूलादीनामाद्युदात्तत्वं विप्रतिषेधेन भवति । परिकूलम् । उपकूलम् ।।

कंसमन्थशूर्पपाथ्यकाण्डं द्विगौ ।। 6 - 2 -122 ।।

कंस , मन्थ , शूर्प, पाथ्य, काण्ड - इत्येतान्युत्तरपदानि द्विगौ समास आद्युदात्तानि भवन्ति । द्विकंसः । त्रिकंसः। द्विमन्थः । त्रिमन्थः । द्विशूर्पः ।त्रिशूर्पः । द्विपाथ्यः । त्रिपाथ्यः । द्विकाण्ड । त्रिकाण्डः । द्विगाविति किम् परमकंसः । उत्तमकंसः ।।

तत्पुरुषे शालायां नपुंसके ।। 6 - 2 -123 ।।

शालाशब्दान्ते तत्पुरुषे समासे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तं भवति । ब्राह्मणशालम् । क्षत्त्रियशालम् । विभाषा सेनासुराच्छायाशालानिशानाम् इति नपुंसकलिङ्गता । तत्पुरुष तइति किम् दृढशालं ब्राह्मणकुलम् । शालायामिति किम् ब्राह्मणसेनम् । नपुंसक इति किम् ब्राह्मणशाला ।।

कन्था च ।। 6 - 2 - 124 ।।

तत्पुरुषे समासे नपुंसकलिङ्गे कन्थाशब्द उत्तरपदमाद्युदात्तं भवति । सौशमिकन्थम् । आह्वकन्थम् । चप्पकन्थम् । संज्ञायां कन्थोशीनरेषु इति नपुंसकलिङ्गता । षष्ठीसमासा एते । नपुंसक इत्येव - दाक्षिकन्था ।।

आदिश्चिहणादीनाम् ।। 6 - 2 -125 ।।

कन्थान्ते तत्पुरुषे समासे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तो भवति । चिहणकन्थम् । मडरकन्थम् । मड्डर इति केचित् पठन्ति । मड्डरकन्थम् । चिहण । मडर । मड्डर । वैतुल। पटत्क । तैत्तालिकर्णः । वैतालिकर्णिरित्यन्ये पठन्ति । कुक्कुट । चिक्कण । चित्कण इत्यपरे पठन्ति । चिहणादिः । आदिः इति वर्तमाने पुरादिग्रहणं पूर्वपदाद्युदात्तार्थम् ।।

चेलखेठकटुककाण्डं गर्हायाम् ।। 6 - 2 - 126 ।।

चेल, खेट, कटुक , काण्ड - इत्येतान्युत्तरपदानि तत्पुरुषे समासे गर्हायां गम्यमानायामाद्युदात्तानि भवन्ति । पुत्त्रचेलम् । भार्याचिलम् । उपानत्खेटम् । नगरखेटम् । दधिकटुकम् । उदश्वित्कटुकम् । भूतकाण्डम् । प्रजाकाण्डम् । चेलादीनां सादृश्येन पुत्रादीनां गर्हा, तत्र पुत्रश्चेलमिवेति विगृह्यव्याघ्रादेराकृतिगणत्वाद् उपमितं व्याघ्रादिभिः इति समासः । गर्हायामिति किम् परमचेलम् ।।

चीरमुपमानम् ।। 6 - 2 - 127 ।।

चीरमुत्तरपमदमुपमानवाचि तत्पुरुषे समासे आद्युदात्तं भवति । वस्त्रं चीरमिव वस्त्रचीरम् । पटचीरम् । कम्बलचीरम् । उपमानमिति किम् परमचीरम् ।।

कललसूपशाकं मिश्रे ।। 6 - 2 - 128 ।।

पलल, सूप , शाक - इत्येतान्युत्तरपदानि मिश्रवाचिनि तत्पुरुषे समासे आद्युदात्तानि भवन्ति । गुडपललम् । धृतपललम् । धृतसूपः । मूलकसूपः । धृतशाकम् । मुद्‌गशाकम् । गुडेन मिश्रं पललं गुडपललम् । भक्ष्येण मिश्रीकरणम् इति समासः । मिश्र इति किम् परमपललम् ।।

कूलसूदस्थलकर्षाः संज्ञायाम् ।। 6 - 2 - 129 ।।

कूल, सूद, स्थल, कर्ष - इत्येतान्युत्तरपदानि तत्पुरुषे समासे, संज्ञायां विषये आद्युदात्तानि भवन्ति । दाक्षिकूलम् । माहकिकूलम् । देवसूदम् । भाचोसूदम् । दाण्डायनस्थली । माहकिस्थली । दाक्षिकर्षः । ग्रामनामवेयान्यतानि । स्थलग्रहणम् - लिङ्गविशिष्टत्वात्स्थलोशब्दोऽपि गृह्यते । जानपादकुण्ड इत्यनेन ङीष्
। संज्ञायामिति किम् परमकूलम् ।।

अकर्मधारये राज्यम् ।। 6 - 2 - 130 ।।

कर्मधारयवर्जिते तत्पुरुषे समासे राज्यम् इत्येतदुत्तरपदमाद्युदात्तं भवति । ब्राह्मणराज्यम् । क्षत्त्रियराज्यम् । अकर्मधारय इति किम् परमराज्यम् । चेलरान्चादिस्वरादव्ययस्वरो भवति पूर्वविप्रतिषेधेन - कुचेलम् , कुराज्यम् ।।

वर्ग्यादयश्च ।। 6 - 2 - 131 ।।

वर्ग्य - इत्येवमादीन्युत्तरपदानि अकर्मधारये तत्पुरुषे समासे आद्युदात्तानि भवन्ति । वासुदेववर्ग्यः । वासुदेवपक्ष्यः । अर्जुनवर्ग्यः । अर्जुनपक्ष्यः । अकर्मधारय इत्येव - परमवर्ग्यः । वर्ग्यादय ः प्रातिपदिकेषु न पठ्यन्ते । दिगादिषु तु - वर्ग, पूग, गण, पक्ष - इत्येवमादयो यो पठिताः , त एव यत्प्रत्ययान्ता वर्ग्यादय इह प्रतिपत्तव्याः ।।

पुत्रः पुम्भ्यः ।। 6 - 2 - 132 ।।

पुत्रशब्दः पुंशब्देभ्य उत्तरस्तत्पुरुषे आद्युदात्तो भवति । कौनटिपुत्रः । दामकपुत्रः । माहिषकपुत्रः । पुत्र इति किम् कौनटिमातुलः । पुम्भ्य इति किम् गार्गीपुत्रः। वात्सीपुत्रः ।।

नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ।। 6 - 2 - 133 ।।

आचार्यः - उपाध्यायः । राजा - ईश्वरः । ऋत्विजः - याजकाः । संयुक्ता - स्त्रीसम्बन्धिनः शयालादयः । ज्ञातयः -मातृपितृसम्बन्धिनो बान्धवाः । आचार्याद्याख्येभ्यः परः पुत्रशब्दो नाद्युदात्तो भवति । आख्याग्रहणात्स्वरुपस्य पर्यायाणां विशेषाणां च ग्रहणं भवति । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः। राजपुत्रः।ईश्वरपुत्रः। नन्दपुत्रः। ऋत्विक्पुत्रः। याजकपुत्रः। होतुः पुत्रः। भ्रातुष्पुत्रः। ऋतो विद्यायोनिसम्बन्धेभ्यः इति षष्ठ्या अलुक् । संयुक्तपुत्रः। सम्बन्धिपुत्रः। श्यालपुत्रः। त्रातिपुत्रः। पुत्रस्वरे प्रतिषिद्धे समासान्तोदात्त्वमेव भवति ।।

चूर्णादीन्यप्राणिषष्ठ्याः ।। 6 - 2 - 134 ।।

उत्तरपदादिः इति वर्त्तते , तत्पुरुष इति छच । चूर्णादीन्युत्तरपदानि अप्राणिवाचिनः षष्ठ्यन्तात्पराणि तत्पुरुषे समासे आद्युदात्तानि भवन्ति । मुद्गवूर्णम् । मसूरजूर्णम् । अप्राणिषष्ठ्या इति किम् मत्स्यचूर्णम् । षष्ठ्या इति
किम् परमचूर्णम् । चूर्ण । करिप । करिव । शाकिन । शाकट । द्राक्षा । तूस्त । कुन्दम । दलप । चमसी । चक्कन । चौल । चूर्णादीन्यप्राण्युपग्रहात् इति सूत्रस्य पाठान्तरम् । तत्र उपग्रह इति षष्ठ्यन्तमेव पूर्वाचार्येपचारेण गृह्यते ।।

षट् च काण्डादीनि ।। 6 - 2 - 135 ।।

षट् पूर्वाक्तानि काण्डादीन्युत्तरपदानि अप्राणिषष्ठ्या आद्युदात्तानि भवन्ति । काण्डं गर्हायाम् इत्युक्तम् , अगर्हायामपि भवति - दर्भकाण्डम् , शरकाण्डम् । चीरमुपमानम् इत्युक्तम् , अनुपमानमपि भवति - दर्भचीरम्, कुशचीरम् । पललसूपशाकं मिश्रे इत्युक्तम् , अमिश्रेऽपि भवति - तिलपललम् , मुद्गसूपः, मूलकशाकम् । कूल संज्ञायाम् इत्युक्तम् , असंज्ञायामपि भवति - नदीकूलम् , समुद्रकूलम् । षडिति किम् राजसूदः ।।

कुण्डं वनम् ।। 6 - 2 - 136 ।।

कुण्डं - शब्दो ।त्र कुण्डसादृश्येन वने वर्त्तते । कुण्डम् इत्येतदुत्तरपदं वनवाचि तत्पुरुषे समासे आद्युदात्तं भवति । दर्भकुण्डम् । शरकुण्डम् । वनमिति किम् मृत्कुण्डम् ।।

प्रकृत्या भगालम् ।। 6 - 2 - 137 ।।

भगालवाच्युत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति । कुम्भीभगालम् । कुम्भीकपालम् । कुम्भीनदालम् । भगालादयो मध्योदात्ताः । प्रकृत्या इत्येतदधिकृतम् अन्तः इति यावद्वेदितव्यम् ।।

शितेर्नित्याबह्वज् बहुव्रीहावभसत् ।। 6 - 2 - 138 ।।

शितेरुत्तरपदं नित्यं यदबह्वज् भसच्छब्दवर्जितं बहुव्रीहौ समासे तत्प्रकृतिस्वरं भवति । शितिपादः। शित्यंसः ।
शित्योष्ठः । पादशब्दो वृषादित्वादाद्युदात्तः । अंसौष्ठशब्दौ च प्रत्ययस्य नित्त्वादाद्युदात्तौ । शितेरिति किम्
दर्शनीयपादः । नित्यग्रहणं किम् शितिककुत् । ककुदस्यावस्खायां लोपो विधीयते । तत्रावस्थाया अन्यत्र शितिककुद इति बह्वजुत्तरपदं भवतीति तेन न नित्याबह्वच् । अबह्वजिति किम् शितिललाटः। बहुव्रीहाविति, किम् शितेः पादः शितिपादः । आभसदिति किम् शितिभसद् । शितिशब्द आद्युदात्तः । पूर्वपदप्रकृतिकस्वरापवादो योगः ।।

गतिकारकोपपदात्कृत् ।। 6 - 2 - 139 ।।

तत्पुरुषे इति वर्त्तते , न बहुव्रीहौ इति । गतेः कारकादुपपदाञ्च कृदन्तमुत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति । प्रकारकः । प्रकरणम् । प्रहारकः । प्रहरणम् । कारकात् - इध्मप्रप्रश्चनः । पलाशशातनः । श्मश्रुकल्पनः । उपपदात् - ईषत्करः । दुष्करः । सुकरः । सर्वत्रैवात्र लित्स्वरः । गतिकारकोपपदादिति किम् देवदत्तस्य कारको देवदत्तकारकः । देवदत्तस्येति शेषलक्षणा षष्ठी । कृद्ग्रहणं विस्पष्टार्थम् । प्रपचतितराम्, प्रपचतितमाम् । इत्यत्र तरबाद्यन्तेन समासे कृते पश्चादाम् , तत्र सतिशिष्टत्वादाम एव स्वरे भवतीत्येके । प्रपचतिदेशेयाद्यर्थ तु कृद्ग्रहणं दृश्यत एव ।।

उभे वनस्पत्यादिषु युगपत् ।। 6 - 2 - 140 ।।

प्रकृत्या इति वर्त्तते । वनस्पत्यादिषु समासेषु उभे पूर्वोत्तरपदे युगपत् प्रकृतिस्वरे भवतः । वनस्पतिः। वन - पितशब्दावाद्युदात्तौ, पारस्करप्रभृतित्वात् सुट् । बृहस्पतिः ।बृहतां पतिः , तद्बृहतोः कारपत्योश्चोरदेवतयोः सुट् तलोपश्चः इति सुट्, तकारलोपश्च । बृहदित्येतदन्तोदात्तं निपातयन्ति । तस्य केचिदाद्युदात्तत्वं वर्णयन्ति । शचीपतिः । शचीशब्दः कृदिकारादक्तिनः इति ङीषन्तत्वादन्तोदात्तः। केचित्तु शाङ्र्गरवादिषु पठन्ति , तेषामाद्युदात्तः । तनूनपात् । तनोते रौणादिक ऊप्रत्ययः , तेन तनूशब्दोऽन्तोदात्तः । न पाति न पालयति वा नपात्, क्विबन्तः नभ्राण्नपात् इत्यादिनाऽऽद्युदात्तो निपातितः । तन्वा नपात्, तनूनपात् । नराशंसः । नरा अस्मिन्नासीनाः शासन्ति नरा एवं शंसन्तीति वा नराशंसः । नृ नये , अबन्तो नरशब्द आद्युदात्तः । शंसशब्दोऽपि धञन्तः , अन्येषामपि दृश्यते इति दीर्घत्वम् । शुनःशेपः । सुन इव शेपोऽस्येति बहुव्रीहिः । तत्र शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम् इति षष्ठ्या अलुक् । उपावाद्युदात्तौ । शाण्डापर्कौ । शण्ड-पर्कशब्दौ धञन्तत्वादाद्युदात्तौ । तयोर्द्वन्द्वे अन्येषामपि दृश्यते इति दीर्घत्वम् । तृष्णावरुत्री । तृष्णाशब्द आद्युदात्तः, वरुत्रीशब्दो ग्रसितादिसूत्रे निपातितोऽन्तोऽन्तोदात्तः । तत्र द्वन्द्वे दीर्घत्वं पूर्ववत् । बम्बाविश्ववयसौ । बम्बशब्दोऽन्तोदात्तः । तयोर्द्वन्द्वे दीर्घत्वं पूर्ववत् । मर्मृत्युः । मरिति मृञो विच्प्रत्ययः । मृत्युशब्दोऽन्तोदात्तः । द्वन्द्वानामदेवताद्वन्द्वार्थः , अनुदात्ताद्युत्तरपदार्थश्च वनस्पत्यादिषु पाठः ।।

देवताद्वन्द्वे च ।। 6 - 2 - 141 ।।

देवतावाचिनां यो द्वन्द्वस्तत्र युगपदुभे पूर्वोत्तरपदे प्रकृतिस्वरे भवतः इन्द्रासोमौ । इन्द्रावरुणौ । इन्द्राबृहस्पती । ऋज्रेन्द्राग्र इति इन्द्रशब्द आद्युदात्तो निपातितः । सोम इति मन्प्रत्ययान्तः । वरुणउनन्प्रत्ययान्तः , तेनाद्युदात्तः । बृहस्पतिशब्दे वनस्पत्यादित्वाद् द्वावुदात्तौ, तेन इन्द्राबृहस्पती - इत्यत्र त्रय उदात्ता भवन्ति । देवताग्रहणं किम् प्लक्षन्यग्रोधौ । द्वन्द्वग्रहणं किम् अग्निष्टोमः ।।

नोत्तरपदेऽनुदात्तादवपृथिवीरुद्रपूषमन्थिषु ।। 6 - 2 - 142 ।।

उत्तरपदेऽनुदात्तादौ पृखिवीरुद्रपूषमन्थिवर्जिते देवताद्वन्द्वे नोभे युगपत्प्रकृतिस्वरे भवतः । इन्द्राग्नी । इन्द्रवायु । अग्नि - वायुशब्दावन्तोदात्तौ । उत्तरपदग्रहणम् अनुदात्तादौ इत्युत्तरपदविशेषणं यथा स्याद, द्वन्द्वविशेषणं मा
भूदिति । अनुदात्तादौ इति विधिप्रतिषेधयोर्विषयविभागार्थम् । अपृथिव्यादिष्विति किम् द्यावापृथिव्यौ । द्यावाशब्द आद्युदात्तो निपातितः । पृथिवीशब्दो ङीष्प्रत्ययान्तत्वादन्तोदात्तः । रुद्र - सौमारुद्रौ । रोदेर्णिलुक्च इति रुद्रशब्दो रक्प्रतययान्तोऽन्तोदात्तः ।पूषन् - इन्द्रापूषणौ । श्वन्नुक्षन्पूषन् इति पूषान्तोदात्तो

निपात्येत । मन्थिन् - शुकामन्थिनौ । मन्थोऽस्यास्तीति मन्थी , इन्नन्तत्वादान्तोदात्तः । दृथिव्यादिषु तु उभे युगपत् प्रकृतिस्वरे भवत एव ।।
अन्तः ।। 6 - 2 -143 ।।
अन्तः इत्यधिकारः । यदित ऊर्ध्वमनुकमिष्यामस्तत्र समासस्योत्तरपदस्यान्त उदात्तो भवतीत्येवं तद्वेदितव्यम् ।
वक्ष्यति - थाथधञ्क्ताजबित्रकाणाम् इति । सुनीथः । अवभृथः ।।
थाथधञ्क्ताजबित्रकारणाम् ।। 6 - 2 - 144 ।।
थ , अथ, धञ् , क्त, अप् , इत्र , क - इत्येवमन्तानामुत्तरपदानां गतिकारकोपपदात्परेषामन्त उदात्तो भवति । सुनीथः । अवभृथः ।
हनिकुषिनीरमिकाशिभ्यः क्थन् इति अवे भृञः इति च क्थान्प्रत्ययान्तावेतौ । तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनाद्युदात्तरपदं स्यात् । अथ - आवसथः ।
उपवसथः । उपसर्गे वसेः इत्यथन्प्रत्ययः । घञ् - प्रभेदः । काष्ठभेदः । रज्जुभेदः । क्त - दूरादागतः । विशुष्कः । आतपशुष्कः । अच् -प्रक्षयः ।
प्रजयः । क्षयो निनासे जयः करणम् तइथति आद्युदात्तौ क्षयजयशब्दौ प्रयोजयतः । अप् - प्रलवः । प्रसवः । इत्र - प्रलवित्रम् । प्रसवित्रम् । क - गोवृषः
खरीवृषः । गां वर्षति , खरीं वर्षतीति मूलविभुजा दित्वात्कप्रत्ययः । प्रवृषः । प्रह्वषः । इगुपध इति कप्रत्ययः । वृषादीनां च इति वृषशब्द आद्युदात्तः ।
गतिकारकोपपदादित्येव - सुस्तुतं भवता । कर्मप्रवचनीयेऽव्ययस्वर एव भवति ।।
सृपमानात् क्तः ।। 6 - 2 - 145 ।।
सु इत्येतस्मादुपमानाञ्च परं क्तान्तमुत्तरपदमन्तोदात्तं भवति । सुकृतम् । सुभुक्तम् । उपमानात् - वृकावलुप्तम् । शशप्लुतम् । सिंहविनर्दितम् । सुशब्दाद्
गतिरनन्तलः इति प्राप्ते उपमानादषि तृतीया कर्मणि इति अयमपवादः । ग्तिकारकोपपदादित्येव - सुस्तुतं भवता ाः
संज्ञायामनाचितादीनाम् ।। 6 - 2 - 146 ।।
संज्ञायां विषये गतिकारकोपपदात् क्तान्तमुत्तरपदमन्तोदात्तं भवति आचितादीन्वर्जयित्वा । सम्भूतो रामायणः । उपहूतः शाकल्यः । परिजग्धः कौण्डिन्यः ।
सम्भूत इति प्राप्त्यर्थाद भवतेः कर्मणि क्तः । गतिरनन्तरः इत्यत्र हि कर्मणि इत्यनुवर्त्तते , तद्बाधनार्थ चेदम् । धनुष्खाता नदी । कुद्दलखाता नगरी ।
हस्तिमृदिता भूमिः । तृतीया कर्मणि इति प्राप्तिरिह बाध्यते ।अनाचितादीनामिति किम् आचितम् । पर्याचितम् । पर्याचितम् । आस्थापितम् । परगृहीतम् ।
निरुक्तम् । प्रतिपन्नम् । प्रशिलष्टम् । प्रशिलष्टम् । उपहतम् । उपस्थितम् ।। संहिताऽगवि । संहिताशब्दो यदा गोरन्यस्य संज्ञा, तदाऽन्तोदात्त एव ।।
प्रवृद्धादीनां च ।। 6 - 2 - 147 ।।
प्रवृद्धादीनां च क्तान्तमुत्तरपदमन्तोदात्तं भवति । प्रवृद्धं यानम् । प्रवृद्धो वृषलः । प्रयुक्तः सक्तवः । आकर्षेऽवहितः । अवहितो भोगेषु । खट्वाखढः ।
कविशस्तः । यानादीनामत्र गणे पाठः प्रयोवृत्तिप्रदर्शनार्थंः ष न विषयनियमार्थः । यानादिभ्योऽन्यत्रापि तेषामन्तोदात्तत्वं भवत्येव । विषयनियमार्थं एवेत्येके
। असंज्ञार्थोऽयमारम्भः । आकृतिगणश्च प्रवृद्धादिर्द्रष्टव्यः । तेन पुरुस्यूतं वासो देयम् , पुनर्निष्कृतो रथः - इत्येवमादि सिद्धं भवति ।।
कारकाद्दत्तश्रुतयोरेवाशिषि ।। 6 - 2 - 148 ।।
संज्ञायाम् इति वर्त्तते क्तः इति च । संज्ञायां विषये आशिषि गम्यमानायां कारकादुत्तरयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तो भवति । देवा एनं देयासुर्द्रवदत्तः
। विष्णुरेनं श्रूयाद् विष्णुश्रुतः । कारकादिति किम् कारकान्नियमे म् भूत् - सम्भूतो रामायणः । दत्तश्रुतयोरिति किम् देवपालितः । एतस्मान्निमादत्र
संज्ञायामनाचितादीनाम् इत्यन्तोदात्तत्वं न भवति , तृतीया कर्मणि इत्येवात्र भवति । एवकारकरणं किम् कारकावधारणं यथा स्याद्, दत्तश्रूतावधारणं मा
भूत् । अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति - संश्रुतः, विश्रुतः । आशिषीति किम् अनाशिषि नियमो मा भूत् । देवैझ खाता देवखाता ।
कारकाद्दत्तश्रुतयोराशिष्येव - इत्यमप्यत्र नियम् इष्यते , तेनाहतो नदति देवदत्त इत्यत्र न भवति । देवदत्त इति कस्यचित् शङ्खस्य नाम । तत्र तुतीया
कर्मणि इति पूर्वपदप्रकृतिस्वरत्वमेव भवति ।।
इत्थम्भूतेन कृतमिति च ।। 6 - 2 -149 ।।
इमं प्रकारमापन्नः - इत्थम्भूतः । इत्थम्भूतेन कृतम् इत्येतस्मिन्नर्थे यः समासो वर्त्तते तत्र क्तान्तमुत्तरपदमन्तोदात्तं भवति । सुप्तप्रलपितम् । उन्मत्तप्रलपितम्
। प्रमगीतम् । विपन्नश्रुतम् । कृतम् इति क्रियासामान्ये करोतिर्वर्त्तते, नाभूतप्रादुर्भाव एव तेन प्रलपिताद्यपि कृतं भवति । तृतीया कर्मणि इत्यस्यायमपवादः
। भावे तु
यदि प्रलपितादयः , तदा थाथादिस्वरेणैव सिद्धमन्तोदात्तं भवति ।
अनो भावकर्मवचनः ।। 6 - 2 - 150 ।।
अनप्रत्ययान्तमुत्तरपदं भाववचनं कर्मवचनं च कारकात्परमन्तोदात्तं भवति । ओदनभोजनं सुखम् । पयः पानं सुखम् । चन्द्नप्रियङ्गुकालेपनं सुखम् ।
कर्मवचन - राजभोजनाः शालयः। राजाच्छाददानि वासांसि । कर्माणि च येन संस्पर्शात्कर्तुः शरीरसुखम् इत्ययं योग उभयथा वर्ण्यते - कर्मण्युपपदे भावे
ल्युङ् भवति, कर्मण्यभिधेये ल्युड् भवतीति । तत्र पूर्वस्मिन् सूत्रार्थे भाववचनोदाहरणानि, उत्तरत्र कर्मवचनोदाहरणानि । अन इति किम् हस्तहार्यमुदश्वित्
। भावकर्मवचन इति किम् दन्तधावनम् । करणे ल्युट् । कारकादित्येव - निदर्शनम् । अवलेखनम् । सर्वेषु प्रत्युदाहरणेषु प्रकृतिस्वरो भवति ।।
मन्क्तिन्व्याख्यानशयनासनस्थानयाकादिक्रीयाः ।। 6 - 2 - 151 ।।
मन्नन्तम् , क्तिन्नन्तम् , व्याख्यान, शयन, आसन, स्थान - इत्येतानि, याजकादयः , क्रीतशब्दश्चोत्तरपदमन्तोदात्तं भवति । मन् - रथवर्त्मं , शकटवर्त्मं ।
क्तिन् - पाणिनिकृतिः आपिशालिकृतिः । व्याख्यान - ऋगयनव्याख्यानम् , छन्दोव्याख्यानम् । शयन - राजशयनम्, ब्राह्मणशयनम्, आसन - राजासनम्,

ब्राह्मणासनम्, स्थान - गोस्थानम् , अश्वस्थानम् . याजकादिः - ब्राह्मणासनम् । स्थान - गोस्थानम् , अश्वस्थानम् । याजकादिः - ब्राह्मणयाजकः । क्षत्त्रिययाजकः । ब्राह्मणपूजकः । क्षत्त्रि.यपूजकः । याजकादयो ये याजकादिभिश्च इति षष्ठी समासार्थाः पठ्यन्ते त एवेह गृह्यन्ते । क्रीत - गोक्रीतः । अश्वक्रीय। कृत्स्वरापवादोऽयं योगः । क्रीतशब्दे तु तृतीया कर्मणि इत्यस्यापवादः। व्याख्यानशयनासनस्खानानामभावकर्मार्थं ग्रहणम् । कारकादित्येव - प्रकृतिः । प्रह्वतिः ।।

सप्तम्याः पुष्यम् ।। 6 - 2 - 152 ।।

सप्तम्यन्तात्परं पुण्यमित्येतदुत्तरपदमन्तोदात्तं भवति । अध्ययने पुण्यम् अध्ययनपुण्यम् । वेदे पुण्यं वेदपुण्यम् । सप्तमी इति योगविभागात्समासः । तत्पुरुषे तुल्यार्थ इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमित्यन्तोदात्तत्वं विधीयते । उणादीनां तु व्युत्पत्तिपक्षे - कृत्स्वरेणाद्युदात्तः पुण्यशब्दः स्यादिति ।सप्तम्या इति किम् वेदेन पुण्यं वेदपुण्यम् ।।

ऊनार्थकलहं तृतीयायाः ।। 6 - 2 - 143 ।।

ऊनार्थान्युत्तरपदानि, कलहशब्दश्च तृतीयान्तात् परणअयन्तोदात्तानि भवन्ति । माषोनम् । कार्शापणोनम् । माषविकलम् । कार्षापणविकलम् । कलह - असिकलहः । वाक्कलहः । तृतीयापूर्वपदप्रकृतिस्वरापवादो योगः । अत्र केविदर्थ इति स्वरुपग्रहणमिच्छिन्ति । धान्येनार्थो प्रतिपदोक्तत्वादेव तृतीयसमासपरिग्रहे सिद्धे तृतीयाग्रहणं विस्पष्टार्थम् ।।

मिश्रं चानुपसर्गमसन्धौ ।। 6 - 2 -154 ।।

तृतीया इति वर्त्तते । मिश्र - इत्येतदुत्तरपदमनुपसर्गं तृतीयान्तात्परमन्तोदात्तं भवत्यसन्धौ गम्यमाने । गुडमिश्राः । तिलमिश्राः । सर्पिर्मिश्राः । मिश्रमिति किम् गुधानाः । अनुपसर्गमिति किम् गुडसम्मिश्राः । इहानुपसर्गग्रहणं ज्ञापकम् - अन्यत्र मिश्रग्रहणे सोपसर्गग्रहणस्य । तेन मिश्रश्लक्ष्णैरिति सोपसर्गेणापि मिश्रशब्देन तृतीयासमासो भवति । असन्धाविति किम् ब्राह्मणमिश्रो राजा । ब्राह्मणैः सह संहितः - ऐकार्ध्यमापन्नः । सन्धरिति हि पणबन्धेनैकार्थ्यमुच्यते । केचित्पुनराहुः - गृह्यमाणविशेषा प्रत्यासत्तिः - सन्धिरिति, अत्र राज्ञो बाह्मणैः सह देशप्रत्यासत्तावपि सत्यां मूर्त्तिविभागस्वरुपभेदो गृह्यत इति ब्राह्मणमिश्रो राजेति प्रत्युदाह्नियते । उदाहरणेष्वविभागापत्तिरेव - गुडमिश्रा इति ।।

नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः ।। 6 - 2 - 155 ।।

सम्पादि, अर्ह, हित, अलम् - इत्येवमर्था ये तद्धितास्तदन्तान्युत्तरपदानि नञो गुणप्रतिषेधे वर्त्तमानात् पराण्यन्तोदात्तानि भवन्ति । सम्पादिः कर्णवेष्टकाभ्यां सम्पादि मुखं कार्णवेष्टकिकम्, न कार्णवेष्टकिकम् थअकार्णवेष्टकिकम् । अर्ह - छेदमर्हति छैदिकः , न छैदिकोऽच्छैदिकः । हित - वत्सेभ्यो हितो वत्सीयः , न वत्सीयोऽवत्सीयः । अलमर्थं - सन्तापाय प्रभवति सान्तापिकः, न सान्तापिकोऽसान्तापिकः । नञ इति किम् गर्दभरथमर्हति गार्दभरथिकः । विगार्दभरथिकः । गुणप्रतिषेध इति किम् गार्दभरथिकादन्योऽगार्दभरथिकः । गुण इति तद्धितार्थप्रवृत्तनिमित्तं सम्पादित्वाद्युच्यते । तत्प्रतिषेधो यत्रोच्यते समासे तत्रायं विधिः । कर्णवेष्टकाभ्यां न सम्पादि मुखमिति सम्पाद्युर्हहितालमर्था इति किम् पाणिनीयमधीते पाणिनीयः , नपाणिनीयोऽपाणिनीयः । तद्धिता इति किम् कन्यां वोढुमर्हति कन्यावोढा, न वोढा अवोढा - अर्हे कृत्यतृचश्च इति तृच् ।।

ययतोश्चातदर्थे ।। 6 - 2 - 156 ।।

य , यत् - इत्येतौ यौ तद्धितावतदर्थे वर्त्तेते तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयादन्त उदात्तो भवति । पाशानां समूहः पाश्या , न पाश्या अपाश्या । अतृण्या । यत् - दन्तेषु भवं दन्त्यम् , न दन्त्यम् दन्त्यम् । अकर्ण्यम् । अतदर्थ इति किम् पादर्थमुदकं पाद्यम्, न पाद्यमपाद्यम् । तद्धिता इत्येव - अदेयम् । गुणप्रतिषेध इत्येव - दन्त्यादन्यत् अदन्त्यम् । निरनुबन्धकैकानुबन्धकयोर्ययतोर्ग्रहणादिह न भवति - वामदेवाड् ड्यड्ड्यौ - वामदेव्यम् , न वामदेव्यमवामदेव्यमिति ।।

अच्कावशक्तौ ।। 6 - 2 - 157 ।।

अच् , क - इत्येवमन्तमशक्तौ गम्यमानायामुत्तरपदं नञः परमन्तोदात्तं भवति । अपचो यः पक्तुं न शक्रोति । अजयः । कः खल्वपि - अविक्षिपः । अविलिखः । अशक्ताविति किम् अपचः , दीक्षितः । अपचः पिरप्राजकः ।।

आक्रोशेच ।। 6 - 2 -158 ।।

आक्रोशे च गम्यमाने नञ उत्तरमच्कान्तमन्तोदात्तं भवति । अपचोऽयं जाल्मः । अपठोऽयं जाल्मः । पक्तुं पठितुं शक्तोऽप्येवमाक्रुश्यते । अविक्षिपः । अविलिखः ।।

संज्ञायाम् ।। 6 - 2 - 159 ।।

आक्रोशे गम्यमाने नञः परमुत्तरपदं संज्ञाया वर्त्तमानमन्तोदात्तं भवति । अदेवदत्तः । अयज्ञदत्तः । अविष्णुमित्रः।।

कृत्योकेष्णुञ्चार्वादयश्च ।। 6 - 2 - 160 ।।

कृत्य, उक , इष्णुच् - इत्येवमन्ताश्चार्वादयश्च नञ उत्तरेऽन्तोदात्ता भवन्ति । कृत्य - अकर्त्तव्यम् । अकारणीयम् । उक्- अनागामुकम् । अनपलाषुकम् । इष्णुच् - अनलङ्करिष्णुः । अनिराकरिष्णुः । इष्णुज्ग्रहणे कर्त्तरि भुवः खिष्णुच् थइत्स्य द्व्यनुबन्धकस्यापि ग्रहणमिकारादेर्वधानसामर्थ्याद् भवति । अनाढ्यम्भविष्णुः । असुभगम्भविष्णुः । चार्वादयः - अचारुः । असाधुः । अयौधिकः । अवदान्यः छ चारु । साधु । यौधिक । अनङ्गमेजय । अत्र द्वितीये नञ्समासेऽन्तोदात्तत्वम् । अननङ्गमेजयः । वदान्यझ । अकस्मात् । अत्रापि द्वितीये नञ्समासेऽन्तीदात्तत्वम् - अनकस्मात्

वर्त्तमानवर्द्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः संज्ञायाम् । एते वर्त्तमानादयः संज्ञायां द्रष्टव्याः । विकारसदृशे व्यस्तसमस्ते । अविकारः । असदृशः । अविकारसदृशः । गृहिपति । गृहपतिकः । राजाह्नोश्छन्दसि । अराजा । अनहः । भाषायां नञ्स्वर एव भवति । चार्वादिः ।।

विभाषा तृन्नन्नतीक्ष्णशुचिषु ।। 6 - 2 - 161 ।।

तृन्नन्त , अन्न, तीक्ष्ण, शुचि - इत्येतेषु नञ उत्तरेषु विभाषाऽन्त उतात्तो भवति । अकर्त्ता । अन्न - अनन्नम् । तीक्ष्ण - अतीक्ष्णम् । शुचि - अशुचिः । पक्षे - अव्ययस्वर एव भवति ।।

बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ।। 6 - 2 - 162 ।।

बहुव्रीहौ समासे इदम् , एतद् , तत् - इत्येतेभ्य उत्तरस्य प्रखमशब्दस्य पूरणप्रत्ययान्तस्य च क्रीयागणनवर्त्तमानस्यान्त उदात्तो भवति । इदं प्रथमं गमनं भोजनं वा स इदम्प्रथमः, इदन्द्वितीयः , इदन्तृतीयः । एतत्प्रथमः, एतद्द्वितीयः, एतत्तृतीयः । तत्प्रथमः, तद्द्वितीयः, तत्तृतीयः । बहुव्रीहाविति किम् अनेन प्रथम इदम्प्रथमः । तृतीया इति योगविभागात्समासः । इदमेतत्तद्भ्य इति किम् यत्प्रथमः । प्रथमपूरणयोरिति किम् तानि बहून्यस्य तद्बहुः । क्रियागणन इति किम् अयं प्रथम एषां त इदम्प्रथमाः । द्रव्यगणनमेतत् । गणन इति
किम् अयं प्रथम एषामिदम्प्रथमाः । इदाम्प्रधाना इत्यर्थ◌ः । उत्तरपदस्य कार्यित्वात् कपि पूर्वमन्तोदात्तं भवति । इदम्प्रथमकाः । बहुव्रीहौ इत्येतद् वनं समासे इति प्रागेतस्मादधिकृतं वेदितव्यम् ।।

संख्यायाः स्तनः ।। 6 - 2 - 163 ।।

संख्यायाः परः स्तनशब्दो बहुव्रीहौ समासेऽन्तोदात्तो भवति । द्विस्तना । त्रिस्तना । चतुः स्तना। संख्याया इति किम् दर्शनीयस्तना । स्तन इति किम् द्विशिराः ।।

विभाषा छन्दसि ।। 6 - 2 - 164 ।।

छन्दसि विषये बहुव्रीहौ समासे संश्यायाः परः स्तनशब्दो विभाषाऽन्तोदात्तो भवति । द्विस्तनां कुर्याद्वामदेवः द्विस्तनां करोति द्यावापृखिव्योर्दोहाय । चतुः स्तनां करोति पशूनां दोह्मय। चतुः स्तनां करोति ।।

शंज्ञायां मित्त्राजिनयोः ।। 6 - 2 - 165 ।।

संज्ञायां विषये बहुव्रीहौ समासे मित्त्र, अजिन - इत्येतयोरुत्तरपदयोरन्त उदात्तो भवति । देवमित्त्रः । ब्रह्ममित्त्रः । वृकाजिनः । कूलाजिनः । कृष्णाजिनः ।। संज्ञायामिति किम् प्रियमित्त्रः । महाजिनः । ऋषिप्रितिषेधो मित्त्रे । विश्वामित्त्र ऋषिः ।।

व्यवायिनोऽन्तरम् ।। 6 - 2 - 166 ।।

व्यवायी - व्यवधाता, तद्वाचिनः परमन्तरं बहुव्रीहौ समासेऽन्तोदात्तं भवति । बस्त्रान्तरः । वटान्तरः । कम्बलान्तरः । वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरं । वस्त्र्व्यवधायक इत्यर्थः । व्यवायिन इति किम् आत्मान्तरः । आत्मा - स्वभावोऽन्तरः - अन्यो यस्यासावात्मान्तरः ।।

मुखं स्वाङ्गम् ।। 6 - 2 - 167 ।।

मुखमुत्तरपदं स्वाङ्गवाचि बहुव्रीहौ समासेऽन्तोदात्तं भवति । गौरमुखः । भद्रमुखः । स्वाङ्गमिति किम् दीर्घमुखा शाला । स्वाङ्गमद्रवादिलत्रणमिह गृह्यते ।।

नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ।। 6 - 2 - 168 ।।

अव्यय, दिक्शब्द, गो , महत् , स्थूल, मुष्टि, पृथु, वत्स - इत्येतेभ्यः परं मुखं स्वाङ्गवाचि बहुव्रीहौ समासे नान्तोदात्तं भवति । अव्यय - उञ्चेर्मुखः । नीचैर्मुखः । दिक्शब्द - प्राङ्मुखः । प्रत्यङ्मुखः । गो - गोमुखः । महत् - महामुखः । स्थूल - स्थूलमुखः । मुष्टि -मुष्टिमुखः । पृथु - पृथुमुखः । वत्स - वत्समुखः । पूर्वपदप्रकृतिस्वरो यथायोगमेषु भवति । गोमुषुटिवत्सबूर्वस्योपमानलक्षणो विकल्पः पूर्वविप्रतिषेधेन बाध्यते ।।

निष्ठोपमानादन्यतरस्याम् ।। 6 - 2 - 169 ।।

निष्ठान्तादुपमानवाचिनश्च मुखं स्वाङ्गमुत्तरपदमन्यतरस्यां बहुव्रीहौ समासेऽनेतोदात्तं भवति । प्रक्षालितमुखः । यदैतदुत्तरपदान्तोदात्तत्वं न भवति, तदा निष्ठोपसर्गपूर्वमन्यतरस्याम् इति पक्षे पूर्वपदान्तोदात्तत्वम् , तदभावपक्षेऽपि पूर्वपदप्रकृतिस्वरत्वेन गतिस्वर इति त्रीण्युदाहरणानि भवन्ति । उपमानात् - सिंहमुखः । व्याघ्रमुखः ।।

जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नः ।। 6 - 2 - 170 ।।

जातिवाचिन आच्छादनवर्जितात् कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमितप्रतिपन्नान् वर्जयित्वा बहुव्रीहौ समासेऽन्तोदात्तं भवति । शाङ्गरजग्धः । पलाण्डुभक्षितः । सुरापीतः । काल - मासजातः । संवत्सरजातः । द्व्यहजातः । त्र्यहजातः । सुखादिभ्यः - सुखजातः । दुःखजातः । तृप्रजातः ।जात्यादिभ्य इति किम् पुत्रजातः। आहिताग्न्यादित्वात्परनिपातः । अनाच्छादनादिति किम् वस्त्रच्छन्नः । वसनच्छन्नः । अकृतमितप्रतिपन्न इति किम् कुण्डकृतः । कुण्डमितः । कुण्डप्रतिपन्नः । एतेषु बहुव्रीहिषु निष्ठान्तस्य पूर्वनिपातो न भवति अस्मादेव ज्ञापकात् । प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरो योजयोतव्यः । सुखादयस्तृतीयेऽध्याये चपठ्यन्ते ।।

वा जात ।। 6 - 2 - 171 ।।

जातशब्द उत्तरवदे वाऽन्त उदात्तो भवति बहुव्रीहौ समासे जातिकालसुखादिभ्यः । दन्तजातः । स्तनजातः । कालात् - मासजातः । संवत्सरजातः । सुखादिभ्यः - सुखजातः । दुःखजातः ।।

नञ्सुभ्याम् ।। 6 - 2 - 172 ।।
नञ्सुभ्यां परमुत्तरपदं बहुव्रीहौ समासेऽन्तोदात्तं भवति । अयवोदेशः अव्रीहिः । अमाषः । सुयवः । सुव्रीहिः । सुमाषः । समासस्यैतदन्तोदात्तत्वमिष्यते । समासान्ताश्चावयवा भवन्तीतिअनृचः बह्वृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति ।।
कपि पूर्वम् ।। 6 - 2 -173 ।।
नञ्सुभ्यां कपि परतः पूर्वमन्तोदात्तं भवति । अकुमारीको देशः । अवृषलीकः । अब्रह्मबन्धूकः । सुकुमारीकः । सुवृषलीकः । सुब्रह्मबन्धूकः।।
ह्रस्वान्तेऽन्त्यात्पूर्वम् ।। 6 - 2 - 174 ।।
ह्रस्वोऽन्तो यस्य तदिदं ह्रस्वान्तमुत्तरपदं समासो वा, तत्रान्त्यात् पूर्वमुदात्तं भवति कपि परतो नञ्सुभ्यां परं बहुव्रीहौ समासे । अयवको देशः । अव्रीहिकः । अमाषकः । सुयवकः । सुव्रीहिकः । सुमाषकः । पूर्वमिति वर्त्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थम्ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न कपि पूर्वमिति । तेनाज्ञकः , सुज्ञक इत्यत्र कबन्तस्यैवान्तोदात्तत्वं भवति ।।
बहोर्नञ्वदुत्तरपदभूम्नि ।। 6 - 2 -175 ।।
उत्तरपदार्थबहुत्वे यो बहुशब्दो वर्त्तते तस्मान्नञ इव स्वरो भवति । नञ्सुभ्याम इत्युक्तम्, बहोरपि तथा भवति - बहुयवो देशः, बहुव्रीहिः , बहुतिलः। कपि पूर्वम् इत्युक्तम्, बहोरपि तथा भवति - बहुकुमारीको दशः, बहुवृषलीकः , बहुब्रह्मबन्धूकः । ह्रस्वव्रीहिकः, बहुमाषकः । नञो जरमरमित्त्रमृताः । इत्युक्तम् , बहोरपि तथा भवति - बहुजरः । बहुमरः । पहुमितत्रः । वहुमृतः । उत्तरपदभूम्नीति किम् बहुषु मनोऽस्य बहुमना अयम् ।।
न गुणादयोऽवयवाः ।। 6 - 2 -176 ।।
गुणादयोऽवयवाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ता भवन्ति । बहुगुणा रज्जुः । बह्वक्षरं पदम् । बहुच्छन्दोमानम् । बहुसुक्तः । बहुध्यायः । गुणादिराकृतिगणो द्रष्टव्यः । अवयवा इति किम् बहुगुणो ब्राह्मणः अध्ययनश्रुतसदाचारादयोऽत्र गुणाः ।।
उपसर्गात् स्वाङ्गं ध्रुवमपशु ।। 6 - 2 - 177 ।।
उपसर्गात् स्वाङ्गं ध्रुवं पर्शुवर्जितमन्तोदात्तं भवति बहुव्रीहौ समासे । प्रवृष्ठः । प्रोदरः । प्रललाटः । ध्रुवम् इत्येकरुपमुच्यते । ध्रुवमस्य शीतमिति यथा । सततं यस्य प्रगतं पृष्ठं भवति स प्रपृष्ठ । उपसर्गादिति किम् दर्शनीयललाटः । स्वाङ्गमिति किम् प्रशाखो वृक्षः । ध्रुवमिति किम् उद्बाहुः क्रोशति। अपर्श्विति किम् उत्पर्शु । विपर्शु ।।
वनं समासे ।। 6 - 2 - 178 ।।
समासमात्रे वनम् इत्येतदुत्तरपदमुपसर्गात्परमन्तोदात्तं भवति । प्रवणे यष्टव्यम् । निर्वणे प्रणिधीयते । प्रनिरन्तरः बहुव्रीहावेव हि स्यात् ।।
अन्तः ।। 6 - 2 - 179।।
अन्तशशब्दादुत्तरं वनमन्तोदात्तं भवति । अन्तर्वणो देशः । अनुपसर्गार्थं आरम्भः ।।
अन्तश्चः ।। 6 - 2 - 180 ।।
अन्तशशब्दश्चोत्तरपदमुपसर्गादन्तोदात्तं भवति । प्रान्तः । पर्यन्तः । बहुव्रीहिरयम् , प्रादिसमासो वा ।।
न निविभ्याम् ।। 6 - 2 - 181 ।।
नि, वि - इत्येताभ्यामुत्तरो।न्तशब्दो नान्तोदात्तो भवति । न्यन्तः । व्यन्तः । पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशाः तत्र उदात्तस्वरितयोर्यणः स्वरितोऽनिदात्तस्य इति स्वरितो भवति ।।
परेरभितोभावि मण्डलम् ।। 6 - 2 - 182 ।।
परेरुत्तरमभितोभाविवचनं मण्डलं चान्तोदात्तं भवति । परिकूलम् । परितोरम् । परिमण्डलम् । बहुव्रीहिरयम् , प्रादिसमासः , अव्ययीभावो वा । अव्ययीभावपक्षेऽपि परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु इति पूर्वपदप्रकृत्स्वरत्वं प्रप्तमनेन बाध्यते । अभित इत्युभयतः अभितो भावोऽस्यास्तीति तदभितोभावि ।
यश्चैवंस्वभावं कूलादि, तदभितोभाविग्रहणेन गृह्यते ।।
प्रादतस्वाङ्गं संज्ञायाम् ।। 6 - 2 - 183 ।।
प्रादुत्तरपदमस्वाङ्गवाचि संज्ञायां विषयेऽन्तोदात्तं भवति । प्रकोष्ठम् । प्रगृहम् । प्रैद्वारम् ।अस्वाङ्गमिति किम् प्रहस्तम् । प्रपदम् । संज्ञायामिति किम् प्रपीठम् ।।
निरुदकादीनि च ।। 6 - 2 - 184 ।।
निरुदकादीनि च शब्दरुपाण्यन्तोदात्तानि भवन्ति । निरुदकम् । निरुलपम् । निरुपलमित्यन्ये पठन्ति । निर्मक्षिकम् । निर्मशकम् । एषां प्रादिसमासः बहुव्रीहिर्वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् । निष्कलकः । निष्क्रान्तः क्लकादिति कन्प्रत्ययान्तेन कालब्देन प्रादिसमासः । निष्कालिकः - इत्यन्य पठन्ति । निष्पेषः । दुस्तरीपः । अवितृस्तृतन्त्रिभ्य ईः - तरीः तां पातीति तरीपः , कुत्सितस्तरीपो दुस्तरीपः । निस्तरीप इति केचित् पठन्ति । अपरे - निस्तरीक इति । ते तरीशब्दान्ते बहुव्रीहौ कपं कुर्वन्ति । निरजिनम् । उदजिनम् । उपाजिनम् । परेर्हस्तपादकेशकर्षाः । परिहस्तः । परिपादः । पिरकेशः । परिकर्षः । निरुदकादिराकृतिगणः ।।
अभेर्मुखम् ।। 6 - 2 - 185 ।।

